॥ सुन्दरस्तवः ॥

जाम्बवत्स्मारितबलं सागरोल्लङ्घनोत्सुकम् ।
स्मरतां स्फूर्तिदं दीनरक्षकं नौमि मारुतिम् ॥ १॥

मैनाकसुरसासिंहीरतिलङ्घ्याम्बुधेस्तटे ।
पृषदंशाल्पकाकारं तिष्ठन्तं नौमि मारुतिम् ॥ २॥

त्रिकूटशृङ्गवृक्षाग्रप्राकारादिष्ववस्थितम् ।
दुर्गरक्षेक्षणोद्विग्नचेतसं नौमि मारुतिम् ॥ ३॥

लङ्कयाऽधृष्यवाममुष्टिघातावघूर्णया ।
उक्त्वाऽऽयतिमनुज्ञातं सोत्साहं नौमि मारुतिम् ॥ ४॥

विविधैर्भवनैर्दीप्तां पुरीं राक्षससङ्कुलाम् ।
पश्यन्तं राक्षसेन्द्रान्तःपुरगं नौमि मारुतिम् ॥ ५॥

ज्यौत्स्न्यां निश्यतिरम्येषु हर्म्येषु जनकात्मजाम् ।
मार्गमाणमदृष्ट्वा तां विषण्णं नौमि मारुतिम् ॥॥

कुम्भकर्णादिरक्षोऽग्य्रप्रासादावृतमुत्तमम् ।
सुगुप्तं रावणगृहं विशन्तं नौमि मारुतिम् ॥ ७॥

पुष्पकाख्यं राजगृहं भूस्वर्गं विस्मयावहम् ।
दृष्ट्वाप्यदृष्ट्वा वैदेहीं दुःखितं नौमि मारुतिम् ॥ ८॥

रत्नोज्ज्वलं विश्वकर्मनिर्मितं कामगं शुभम् ।
पश्यन्तं पुष्पकं स्फारनयनं नौमि मारुतिम् ॥ ९॥

सङ्कुलान्तःपुरं सुप्तनानायौवतमच्छलम् ।
दृष्ट्वाप्यविकृतं सीतां दिदृक्षुं नौमि मारुतिम् ॥ १०॥

पीवानं रावणं सुप्तं तत्पत्नीं शयनेऽन्यतः ।
दृष्ट्वा सीतेति संहृष्टं चपलं नौमि मारुतिम् ॥ ११॥

सुप्तस्त्रीदृष्टिनष्टात्मब्रह्मचर्यविशङ्किनम् ।
अपक्रम्याऽऽपानभूमिं गच्छन्तं नौमि मारुतिम् ॥ १२॥

कालात्ययनृपक्रोधकार्यासिद्धिविशङ्कितम् ।
निर्विण्णमप्यनिर्वेदे दृष्टार्थं नौमि मारुतिम् ॥ १३॥

पुनर्निवृत्तौ कापेयमानुषापायशङ्किनम् ।
रामादीन् सिद्धये नत्वोत्तिष्ठन्तं नौमि मारुतिम् ॥ १४॥

सीतामशोकवनिकानद्यां स्नानार्थमेष्यतीम् ।
द्रष्टुं पुष्पितवृक्षाग्रनिलीनं नौमि मारुतिम् ॥ १५॥

सीतां दृष्ट्वा शिंशपाधःस्थितां चारित्रमातृकाम् ।
मनसा राममासाद्य निवृत्तं नौमि मारुतिम् ॥ १६॥

इह सीता ततो रामः ईदृशीयं स तादृशः ।
अन्योन्यमर्हत इति स्तुवन्तं नौमि मारुतिम् ॥ १७॥

राक्षसीवेष्टितेहेयं तद्द्रष्टाहं नृपात्मजौ ।
नमामि सुकृतं मेऽतीत्याश्वस्तं नौमि मारुतिम् ॥ १८॥

सुप्तोत्थितं दृष्टपूर्वं रावणं प्रमदाऽऽवृतम् ।
सीतोपच्छन्दकं दृष्ट्वावप्लुतं नौमि मारुतिम् ॥ १९॥

रावणागमनोद्विग्नां विषण्णां वीक्ष्य मैथिलीम् ।
सर्वोपमाद्रव्यदूरां सीदन्तं नौमि मारुतिम् ॥ २०॥

सान्त्वेनानुप्रदानेन शौर्येण जनकात्मजाम् ।
रक्षोऽधिपे लोभयति वृक्षस्थं नौमि मारुतिम् ॥ २१॥

मां प्रधृष्य सतीं नश्येरिति तद्धितवादिनीम् ।
करुणां रूपिणीं सीतां पश्यन्तं नौमि मारुतिम् ॥ २२॥

मासद्वयावधिं कृत्वा स्मारयित्वाऽऽत्मपौरुषम् ।
अपयातं रावणं धिक्कुर्वन्तं नौमि मारुतिम् ॥ २३॥

कुलं वीर्यं प्रेम गत्यन्तराभावं विवृण्वतीः ।
राक्षसीर्दुर्मुखीमुख्याः जिघत्सुं नौमि मारुतिम् ॥ २४॥

क्रुद्धाभिर्भर्त्स्यमानां तामात्मानमनुशोचतीम् ।
देवीं विलोक्य रुदतीं खिद्यन्तं नौमि मारुतिम् ॥ २५॥

पुनर्निर्भत्सनपरास्वासु वेणीस्पृगङ्गुलिम् ।
मानुष्यगर्हिणीं देवीं पश्यन्तं नौमि मारुतिम् ॥ २६॥

विलपन्तीं जनस्थानाहरणाद्यनुचिन्तनैः ।
प्राणत्यागपरां सीतां दृष्ट्वाऽऽर्तं नौमि मारुतिम् ॥ २७॥

त्रिजटास्वपनसंहृष्टां रक्षःस्त्रीभ्योऽभयप्रदाम् ।
अस्वस्थहृदयां देवीं पश्यन्तं नौमि मारुतिम् ॥ २८॥

अचिरादात्मनिर्यातमदृष्ट्वोद्बन्धनोद्यताम् ।
सीतां दृष्ट्वा शिंशपाध उद्विग्नं नौमि मारुतिम् ॥ २९॥

वामाक्ष्यूरुभुजस्पन्दैर्निमित्तैर्मुदितां शनैः ।
सीतां शान्तज्वरां दृष्ट्वा प्रहृष्टं नौमि मारुतिम् ॥ ३०॥

दृष्टात्रेयं कथं सान्त्व्योपेयाऽऽवेद्या न वेद्म्यहम् ।
इति रामकथाख्यानप्रवृत्तं नौमि मारुतिम् ॥ ३१॥

सुप्ते रक्षिगणे श्रुत्वा शुभां रामकथां द्रुमम् ।
उत्पश्यन्तीं जनकजां पश्यन्तं नौमि मारुतिम् ॥ ३२॥

स्वप्ने कपिर्दुर्निमित्तं, श्रुता रामकथा शुभा ।
देवीं द्वेधा विमुह्यन्तीं पश्यन्तं नौमि मारुतिम् ॥ ३३॥

का त्वं वसिष्ठचन्द्रात्रिपत्नीष्विति वितर्कितैः ।
सीतामौनमपास्यन्तं प्रणतं नौमि मारुतिम् ॥ ३४॥

रामदूतोऽस्मि मा भैषीः श्रद्धत्स्व प्रतिनेष्यसे ।
विशङ्कां सन्त्यजेत्येवंवदन्तं नौमि मारुतिम् ३५
सुग्रीवसख्यं भूषाद्यावेदनं वालिनो वधम् ।
तीर्त्वाब्धिं दर्शनं देव्या आख्यान्तं नौमि मारुतिम् ॥ ३६॥

अभिज्ञानेन सुग्रीवोद्योगेन विरहाधिना ।
सुखिनीं दुःखिनीं देवीं पश्यन्तं नौमि मारुतिम् ॥ ३७॥

मानिनीं दृढविस्रंभां राघवोद्योगकाङ्क्षिणीम् ।
रक्षो जित्वैव नेयां तां नमन्तं नौमि मारुतिम् ॥ ३८॥

काकोदन्तं रामगुणान् देवृभक्तिं शिरोमणिम् ।
अभिज्ञानतया दात्रीं ध्यायन्तं नौमि मारुतिम् ॥ ३९॥

मणौ प्रतीतामुत्साहोद्योजनप्रार्थिनीं सतीम् ।
आश्वासयन्तमुचितैर्हेतुभिर्नौमि मारुतिम् ॥ ४०॥

पुनस्तदेवाभिज्ञानं स्मारयन्त्या कृताशिषम् ।
मैथिल्या मनसा राममासन्नं नौमि मारुतिम् ॥ ४१॥

दृष्ट्वा सीतां ध्रुवे जन्ये ज्ञातुं रक्षोबलं वनम् ।
विनाश्य तोरणासीनं युयुत्सुं नौमि मारुतिम् ॥ ४२॥

राक्षसीज्ञातवृत्तान्तरावणप्रेषितान् क्षणात् ।
निघ्नन्तं किङ्करानेकं जयिष्णुं नौमि मारुतिम् ॥ ४३॥

जयत्यतिबल इति गर्जन्तं पादपाग्निना ।
दग्ध्वा चैत्यं पुनः सङ्ग्रामोत्सुकं नौमि मारुतिम् ॥ ४४॥

परिघीकृत्य सालद्रुं प्रहस्तसुतमारणम् ।
दशग्रीवबलेयत्ताजिज्ञासुं नौमि मारुतिम् ॥ ४५॥

सप्तामात्यसुतानात्मनिनदैर्गतजीवितान् ।
कृत्वा पुनस्तोरणाग्रे लसन्तं नौमि मारुतिम् ॥ ४६॥

उद्विग्नरावणाज्ञप्तपृतनापतिपञ्चकम् ।
प्रापय्य पञ्चतां तोरणाग्रस्थं नौमि मारुतिम् ॥ ४७॥

अक्षं राजात्मजं वीरं दर्शनीयपराक्रमम् ।
हत्वा नियुद्धे तिष्ठन्तं तोरणे नौमि मारुतिम् ॥ ४८॥

नीतमिन्द्रजितास्त्रेण ब्राह्मेण क्षणरोधिना ।
सभास्थरावणोदीक्षाविस्मितं नौमि मारुतिम् ॥ ४९॥

दशास्यं मन्त्रिसंवीतं वरोदीर्णं महाद्युतिम् ।
अनादृत्याहवक्लान्तिं पश्यन्तं नौमि मारुतिम् ॥ ५०॥

कोऽसि कस्यासि केनात्रागतो भग्नं वनं कुतः ।

प्रहस्तस्योत्तरं दातुमुद्युक्तं नौमि मारुतिम् ॥ ५१॥

सुग्रीवसचिवं रामदूतं सीतोपलब्धये ।
प्राप्तमुक्त्वा तद्धितोक्तिनिरतं नौमि मारुतिम् ॥ ५२॥

भ्रातृसान्त्वित पौलस्त्यादिष्ट वालाग्नियोजनम् ।
कर्तव्यचिन्तातिव्यग्रमुदीर्णं नौमि मारुतिम् ॥ ५३॥

वालदाहभिया सीताप्रार्थनाशीतलानलम् ।
प्रीणयन्तं पुरीदाहाद्भीषणं नौमि मारुतिम् ॥ ५४॥

अवध्य इति वालाग्रन्यस्ताग्निं नगरीं क्षणात् ।
दहन्तं सिद्धगन्धर्वैः स्तुतं तं नौमि मारुतिम् ॥ ५५॥

लब्धा सीता, रिपुर्ज्ञातः, बलं दृष्टं, वृथाखिलम् ।
सीतापि मौढ्याद्दग्धेति सीदन्तं नौमि मारुतिम् ॥ ५६॥

आपृच्छ्य मैथिलीं रामदर्शनत्वरयाचलात् ।
त्रिकूटादुत्पतन्तं तं कृतार्थं नौमि मारुतिम् ॥ ५७॥

सोपायनैरङ्गदाद्यैरुन्नदद्भिरुपास्थितम् ।
दृष्टा सीतेत्युदीर्याथ व्याख्यान्तं नौमि मारुतिम् ॥ ५८॥

तीर्त्वान्विष्योपलभ्याश्वास्य च भंक्त्वोपदिश्य च ।
दग्ध्वा दृष्ट्वाऽऽगतोऽस्मीति ब्रुवन्तं नौमि मारुतिम् ॥ ५९॥

दृष्ट्वा सीतां रामनाम श्रावयित्वा समागतः ।
ब्रूत कर्तव्यमित्येतान् पृच्छन्तं नौमि मारुतिम् ॥ ६०॥

न वयं, कपिराडत्र प्रमाणं प्रतियाम तम् ।
कुर्मस्तदादिष्टमिति प्रत्युक्तं नौमि मारुतिम् ॥ ६१॥

मध्येमार्गं मधुवने निपीय मधु पुष्कलम् ।
नदद्भिर्वानरैः साकं क्रीडन्तं नौमि मारुतिम् ॥ ६२॥

माद्यन्नृत्यत्कपिवृतं ध्वस्ते मधुवने क्षणात् ।
अभियुक्तं दधिमुखेनाव्यग्रं नौमि मारुतिम् ॥ ६३॥

सीतां दृष्टां मधुवनध्वंसाद्विज्ञाय तुष्यता ।
दिदृक्षितं कपीशेनात्यादरान्नौमि मारुतिम् ॥ ६४॥

निशम्य सुग्रीवादेशं त्वरितैः सखिभिर्वृतम् ।
सुग्रीवेणादराद्दृष्टं महितं नौमि मारुतिम् ॥ ६५॥

नियतामक्षतां सीतां अभिज्ञानं मणिं च तम् ।
निवेद्य प्राञ्जलिं प्रह्वं कृतार्थं नौमि मारुतिम् ॥ ६६॥

दृष्ट्वा चूडामणिं साश्रु स्मृत्वा तातविदेहयोः ।
रामेण वृत्तविस्तारे चोदितं नौमि मारुतिम् ॥ ६७॥

विस्रम्भं तर्जनं शोकावेगं च समयावधिम् ।
सन्देशमुक्त्वा कर्तव्योद्योजकं नौमि मारुतिम् ॥ ६८॥

त्वच्चित्ता त्वयि विस्रब्धा विजित्य रिपुमञ्जसा ।
प्रत्यादेयेति विनयाद्वदन्तं नौमि मारुतिम् ॥ ६९॥

स्निग्धरामपरीरम्भमुग्धस्मेरमुखाम्बुजम् ।
हृदयासीनवैदेहीराघवं नौमि मारुतिम् ॥ ७०॥

इति आत्रेय श्रीबालकृष्णशास्त्रिविरचितः
सुन्दरकाण्डप्रतिसर्गसङ्ग्रहात्मकः ।